॥ श्रीशारदाम्बा स्तवनम् ॥

ॐ पीठे काञ्चनकल्पिते सुरुचिरे रत्नप्रभाभास्वरे
नानालङ्कृतिमण्डिते विलसितां स्मेराननां सुन्दरीम् ।
दीव्यद्रत्नकिरीटकुण्डलधरां शीताम्शुलेखान्विताम्
देवीं शारदनीरदोज्वलरुचिं श्रीशारदाम्बां भजे ॥ १॥

हस्ताग्रे प्रियशारिकां विदधतीं वामेकरे पुस्तकम्
शुभ्रस्फाटिकमक्षसूत्रमपरे हस्ते वहन्तीं च ताम् ।
श्रीशृङ्गाद्रिनिकेतनां सुविमलां शुभ्राम्बरालङ्कृताम्
वन्देऽहं भवतारिणीं भगवतीं भक्तेष्टदां भारतीम् ॥ २॥

आदौ शङ्करदेशिकेन्द्रगुरुणा सम्पूजितां भावये
सेव्यां तस्य परम्परागतमहाशृङ्गाद्रिपीठाधिपैः ।
अद्यापि स्थिरभक्तिभावभरितैः श्रीमद्भिराराधिताम्
विद्यातीर्थयतीश्वरैरभिनवेत्याख्याति पूर्वैः सदा ॥ ३॥

श्रीनाथ त्रिदशाधिनाथ गिरिजानाथादि देवार्चिते
तारानाभसनाथ चारुमकुटे नाथान्यदेवोऽस्ति मे ।
मातस्त्वां न विना परस्त्रिभुवने पोतो भवाम्भोनिधेः
त्रातव्योहमपारघोरदुरित व्राताब्धिमग्नश्चिरात् ॥ ४॥

विप्रास्ते वेदमन्त्रैः तवपदयुगपङ्केजलग्नांतरङ्गाः
झङ्कारैर्विभ्रमन्तो नवसुममधुपानप्रमत्ताश्च भृङ्गाः ।
वृक्षेषूद्गीयमानैर्बहुविधनिनदैः कूजितैस्ते विहङ्गाः
घोषैर्वै सुप्रभातं तव जननि पठन्त्यत्र तुङ्गातरङ्गाः ॥ ५॥

धन्यास्ते भुवि ये वसन्ति विमले शृङ्गाद्रितीर्थे नराः
तुङ्गास्नानविधूतसर्वदुरितास्त्वत्पादसेवारताः ।
धन्यास्तेऽपि विहङ्गभृङ्गशफराः सर्वे चरन्त्यत्रये
मातस्त्वत्पदसन्निधानमहिमावेशाश्च धूळीलवाः ॥ ॐ ॥